सम्बन्धयति, कन्यापिता च स्वपुत्रीं वरयितुः स्नुषात्वेन सम्बन्धयति। तदिदं विपर्यासेन सम्बन्धनयनं 'विवाहः'। तयोश्च विवाहे परस्परं गृहभोजनं वस्त्रप्रदानाद्युपचारञ्च कुर्वन्ति। एवमेतौ लोकौ परस्परमुपकुरुतः। तत्र 'इयं' भूमिः साम्ना 'रथन्तरेण' एतन्नामकेनैव 'अमूं' दिवं 'जिन्वति' प्रीणयति; 'असौ' द्यौश्च 'इमां' भूमिं 'बृहता' साम्ना जिन्वति। तत एव सर्वत्रेयं वै रथन्तरमसौ बृहदिति लोकद्वयरूपेण सामद्वयं स्तूयते॥

द्वादशाहे बृहद्रथन्तरयोरपेक्षितत्वेन प्रशंसां कृत्वा तत्प्रसङ्गात् लोकद्वयस्यान्यानपि परस्परोपकारान् दर्शयति—"नौधसेनैवेयममूं जिन्वति, श्यैतेनासाविमां; धूमेनैवेयममूं जिन्वति, वृष्ट्यासाविमां; देवयजनमेवेयममुष्यामदधात्, पशूनसावस्याम्"-इति। "इममिन्द्र सुतं पिब"-इत्यस्यामृच्युत्पन्नं साम 'नौधसम्' *, "त्वामिदा ह्यो नरः"-इत्यस्यामृच्युत्पन्नं साम 'श्यैतम्' †; ताभ्यां लोकयोः परस्परं प्रीतिः। भूमावग्निजन्यो धूमो दिवि गच्छति, द्युलोकात् समुत्पन्ना वृष्टिरुर्व्यां गच्छति; सोऽयं धूमवृष्टिभ्यां परस्परोपकारः। 'देवयजनं' देवयागयोग्यं किञ्चिद्देशम् 'इयं' भूमिः 'अमुष्यां' दिवि अदधात्, 'असौ' च द्यौः पशून् 'अस्यां' भूमावदधात्; अतो देवयजनपशुभ्यां परस्परोपकारः ‡॥

---

* छ० आ० ३. १. ५. ४ ऋचि गे० गा० ६. १. २७. नौधसं (योनिसाम); ऊ० आ० १. १. १३. १. २ ऋचोः प्रगाथरूपे ऊ० गा० १. १. ६. नौधसं (स्तोभम्)।

† "त्वामिदा" छ० आ० ४. १. १. १०. साम श्यैतमुपलभ्यते। "अभि प्र वः"-इति छ० आ० ३. १. ५. २ ऋचि गे० गा० ६. १. २१ श्यैतं (योनिसाम); ऊ० आ० २. १. ५. १९. २ ऋचोः प्रगाथरूपे ऊ० गा० २. १. २. श्यैतं (स्तोभं)। मानं लिङ्ग आ० ब्रा० १. [illegible] ब्रा० ११. ९. ५. सा० भा० अपि द्रष्टव्यम्।

‡ सामब्राह्मणेऽपि एवमेव। ता० ब्रा० ७. १०, १-४ ; ११. ६५।

तत्र देवयजनशब्देन विवक्षितमर्थं व्याचष्टे — "एतद्वा इय-मसुष्यां देवयजनमदधाद्यदेतच्चन्द्रमसि कृष्णमिव"-इति। चन्द्र-मण्डले शशमृगादिशब्देन लोके व्यवह्रियमाणं यदेतत् 'कृष्णमिव' कृष्णवर्णमिव रूपं दृश्यते, एतदेव 'देवयजनं' देवयागयोग्यं वस्तु, 'इयं' भूमिः 'अमुष्यां' दिवि स्थापितवती ॥

चन्द्रमसि कृष्णरूपप्रसङ्गाद्यागेषु शुक्लत्वेन शुक्लपक्षं विधत्ते— "तस्मादापूर्यमाणपक्षेषु यजन्त एतदेवोपेप्सन्त"-इति। यस्मा-द्यागयोग्यं कृष्णं चन्द्रमसि स्थितम्, 'तस्मात्' कारणात् शुक्लपक्षेषु कर्म कुर्वन्तो यजमानाः 'एतदेव' चन्द्रमण्डलम् उपाप्तुमिच्छन्ति। दिने दिने वर्धमानया कलया सर्वतः पूर्यमाणां चन्द्रमण्डलं येषु शुक्लपक्षेषु, तेन ते 'आपूर्यमाणपक्षाः'। कर्मिणां दक्षिणमार्गेण चन्द्रमण्डलप्राप्तिः सर्वासूपनिषत्सु प्रसिद्धा * ॥

देवयजनशब्दं व्याख्याय पशुशब्दं व्याचष्टे — "अथानमावयां; तत्रापि तुरः कावषेय उवाचोषः पोषो जनमेजयकेति ; तस्मा-दाप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति, सन्ति तत्रोषाः इति ; अथो हि पोषोऽसौ नै लोक इमं लोक मभि पर्यावर्तते" -इति। 'असौ' द्युलोकः 'अस्यां' भूमौ 'अथान्' आदधातीत्यध्या-हारः। देशान्तरप्रसिद्धि मुपजीव्य पशुशब्दस्योषशब्दो व्याख्या-नम्। "वश कान्तौ" इत्यस्माद्धातोरूषशब्दो निष्पन्नः। 'ऊषाः' कमनीयाः ; पशूनां चमरादीनां कमनीयत्वं प्रसिद्धम्। ऊष-शब्दव्यवहार एव 'तत्रापि' इत्यादिना प्रदर्श्यते। यस्मादूषः पशु-रिति देशविशेषे पर्यायत्वेन प्रसिद्धा, 'तत्रापि' तस्मादेव कार-णात् तुरनामकः कश्चिदृषिः कवषस्य पुत्रः, जनमेजयनामानं

* का० उप० ५. १०. ४ ; मु० उप० १. २ . ६. २. १६।

राजानं सम्बोध्यैव मुवाच,— हे जनमेजयक ! 'जष: पोष:' पोषशब्दाभिधेय:, पुष्टिहेतु: पशुरिति । यस्मात्तु जषशब्दं पशुषु व्याजहार, 'तस्मादि' तस्मादेव कारणादिदानीमपि 'गव्यं मीमांसमाना:' केचिद्देशविशेषेषु गोरसं क्षीरादिकं विचारयन्त एवं पृच्छन्ति,—'तत्र' तेषु देशेषु, 'किं जूषा३: सन्ति ?'–इति ; गोविषय: प्रश्नस्तेषा मभिप्रेत: । प्रश्नार्था श्रुति: । यस्माज्जूषशब्द-वाच्य: पोषहेतुर्गवादिरूप: पशु:, तस्माज्जूषशब्देन पशुशब्दव्याख्यान सूचितम् । 'असौ' द्युलोक: 'इमं' भूलोक मभिलक्ष्य पर्य्यावर्त्तत, तेन पशुनोपकृतवानित्यर्थ: ॥

इत्थं हृद्द्रयन्तरप्रसङ्गेन द्यावापृथिव्यो: परस्पर मुपकारम् बहुधा प्रपञ्चोपसंहरति— "ततो वै द्यावापृथिवी अभवतां, न द्यावान्तरिक्षान्नान्तरिक्षाद्भूमि:"–इति । 'ततो वै' तस्मादेव पर-स्परोपकारकत्वकारणात्, द्यावापृथिव्यौ वियुक्ते अपि परस्परैकम-त्येन प्राप्युपकारिण्यावभवताम् । न च तत्रान्तरिक्षलोकं कुत्र वर्त्तत इति शङ्कनीयम् ; 'द्यावा' द्युलोको नान्तरिक्षलोकात्, अन्य इति शेष: । भूमिश्च नान्तरिक्षादन्या । उभयोर्द्यावापृथिव्यो-रन्तरिक्षेण सम्बध्यैवावस्थानात् । तस्मादुक्तयोर्द्यावापृथिव्योरेवा-न्तरिक्षस्यान्तर्भाव इत्यभिप्राय: * ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये
(एकोनविंशाध्याये) पञ्चम: खण्ड: ॥ ५ (२०) ॥

---

* नभीत्यादिपङ्क्ती लेखकप्रमादप्रवाहादेव सर्वपुस्तकेष्वशुद्धौ दृष्ट. शुद्धीकृत पाठाव प्रकाशते, तथापि मूलाभिप्रायविरुद्ध एव गम्यते ।

॥ अथ षष्ठः खण्डः ॥

बृहच्च वा इद मग्रे रथन्तरं चास्तां वाक् च वै तन्मनश्चास्तां वाग्वै रथन्तरं मनो बृहत्तद् बृहत्पूर्वं ससृजानं रथन्तर मत्यमन्यत तद्रथन्तरं गर्भ मधत्त तद्वैरूप मसृजत ते द्वे भूत्वा रथन्तरं च वैरूपं च बृहदत्यमन्येतां तद् बृहद्गर्भ मधत्त तद्वैराज मसृजत ते द्वे भूत्वा बृहच्च वैराजं च रथन्तरं च वैरूपं चात्यमन्येतां तद्रथन्तरं गर्भ मधत्त तच्छाक्वर मसृजत तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च शाक्वरं च बृहच्च वैराजं चात्यमन्यन्त तद् बृहद्गर्भ मधत्त तद्रैवत मसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासंस्तानि ह तर्हि त्रीणि छन्दांसि षट् पृष्ठानि नोदाप्नुवंस्सा गायत्री गर्भ मधत्त सानुष्टुभ मसृजत त्रिष्टुब् गर्भ मधत्त सा पङ्क्ति मसृजत जगती गर्भ मधत्त सातिच्छन्दस मसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छन्दांस्यासन् षट् पृष्ठानि तानि तथाकल्पन्त कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैव मेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान् दीक्षते दीक्षते ॥ ६ ( २८ ) ॥

॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां चतुर्थोऽध्यायः ॥४॥

अथास्मिन् द्वादशाहमध्ये पृष्ठ्यषडहे पृष्ठस्तोत्रोपयुक्तानि * सामानि विधातु माख्यायिका माह—"बृहच्च वा इद मग्रे रथन्तरं चास्तां ; वाक् च वै तन्मनश्चास्तां ; वाग्वै रथन्तरम्, मनो बृहत्, तद् बृहत् पूर्वं ससृजानं रथन्तर मत्यमन्यत ; तद्रथन्तरं गर्भ मधत्त, तद्वैरूप मसृजत"-इति । ये बृहद्रथन्तरे पूर्वम् "इमौ वै लोकौ"-इत्यादिना संस्तुते ( ३८० पृ० ), ते उभे एव 'इदं' वैरूपादिसाम-जात मन्तर्भाव्य तदुत्पत्तेः पूर्व मास्ताम् ; 'इदं' वैरूपादिसाम-जात मुत्पत्तेः 'अग्रे' पूर्वं नासीत् । ते च सामनी मनोवाग्रूपे अभवताम् । तत्र वागेव रथन्तरं साम, मनो बृहत्साम । तदे-तन्मनोरूपं बृहत्साम 'ससृजानं' सृष्टिं कर्त्तुं मुद्युक्तम् । 'तत्' तस्या एव सृष्टिसिद्धये 'पूर्वं' प्रथमं वाग्रूपं 'रथन्तरं' साम 'अत्यमन्यत' । वाग्रूपत्वादेव स्त्रीरूपत्वम्, मनोरूपत्वात् स्वस्य पुरुषरूपत्वम् ; तस्मादतिशयितं तत्स्वरूपम् ; तत्र बृहत्साम स्वस्य पुरुषत्वाभि-मानेन रथन्तरसाम्नि स्त्रीत्वभावनया सङ्गम मकरोदित्यर्थः । तत-स्त्रीस्थानीयं तद्रथन्तरं साम स्वोदरमध्ये गर्भ मधत्त ; धृत्वा च वैरूपाख्यं पुत्रस्थानीयं सामान्तर मसृजत ॥

वैरूपस्योत्पत्ति मभिधाय वैराजसाम्न उत्पत्तिं दर्शयति—"ते द्वे भूत्वा रथन्तरं च वैरूपञ्च बृहदत्यमन्येतां ; तद् बृहद्गर्भ मधत्त, तद्वैराज मसृजत"-इति । मातृस्थानीयं रथन्तरं, पुत्रस्थानीयं वैरूपं चेति, 'ते' सामनी द्वे भूत्वा यद् बृहत्सामैकाकित्वेन वर्त्त-मान मस्ति, तदपत्य' मन्येतां, तस्माद् बृहतोऽप्येकाकिनोऽतिशयेन मन्येतां, न्यूनत्वेन बृहत्साम्नि स्त्रीत्वबुद्धिं कृत्वा संयोग मकुरुताम् । तत्र बृहत्साम गर्भं धृत्वा वैराजाख्यं सामान्तर मसृजत ॥

* ३१४ पृ० ६ पं० द्रष्टव्यानि ।

शाक्वरसाम्न उत्पत्तिं दर्शयति—"ते द्वे भूत्वा बृहच्च वैराजं च, रथन्तरं च वैरूपं चात्यमन्येतां तद्; रथन्तरं गर्भमधत्त; तच्छाक्वरमसृजत"—इति। वैराजसाम्नः सृष्टेरूर्ध्वं तदुत्पादकबृहत्साम्नः न्यूनत्वेऽपगते सति 'ते' साम्नी द्वे भूत्वा मिलित्वा वैरूपसहितस्य रथन्तरस्य वायुरूपत्वेन स्त्रीत्वमभिप्रेत्य स्त्रीत्वम् 'अत्यमन्येतां' स्वाधिकारं मत्वा संयोगमकुरुताम्। ततो रथन्तरं साम गर्भं धृत्वा शाक्वराख्यं सामान्तरमसृजत॥

रैवतसाम्न उत्पत्तिं दर्शयति—"तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च शाक्वरं च, बृहच्च वैराजं चात्यमन्यन्त तद्; बृहद्गर्भमधत्त, तद्रैवतमसृजत"—इति। मातृस्थानीयं 'रथन्तरं' पुत्रस्थानीये 'वैरूपं' 'शाक्वरं' चेति; एवं त्रीणि भूत्वा, वैराजेन युक्तस्य बृहत्साम्नो न्यूनत्वमुद्धृत्य 'तदत्यमन्यन्त' तस्मादतिशयं पुरुषस्थानीयं स्वपक्षे मत्वा संयोगमकुर्वत। ततो बृहद्गर्भमधत्त; गर्भं धृत्वा रैवताख्यं सामान्तरमसृजत॥

उक्तानां षण्णां साम्नां पृष्ठस्तोत्रसाधनत्वं दर्शयति—"तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासन्" इति। 'तानि' पूर्वोक्तानि रथन्तरवैरूपशाक्वराणि 'त्रीणि' सामानि, 'अन्यानि' इतरेभ्यो विलक्षणानि, पृष्ठाख्ये षडहे प्रथमतृतीयपञ्चमेष्वयुग्मेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन्। तथा बृहद्-वैराज-रैवत-रूपाणि 'त्रीणि' सामानि, 'अन्यानि' रथन्तरादिभ्यो विलक्षणानि भूत्वा, द्वितीयचतुर्थषष्ठेषु युग्मरूपेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन् * ॥

* "रथन्तरपृष्ठान्ययुजानि, बृहत्पृष्ठानीतराणि। तृतीयादिषु पञ्चस्वन्त्यानि द्वितीयानि वैरूपवैराजशाक्वररैवतानि"—इति आश्व० श्रौ० ७.५.२–४।

अथ षड्विधपृष्ठस्तोत्रसामाधारत्वेन षड्विधानि छन्दांसि दर्शयति—"तानि ह तर्हि त्रीणि छन्दांसि, षट् पृष्ठानि नोदाप्नुवंस्ता गायत्री गर्भमधत्त, सानुष्टुभमसृजत; त्रिष्टुब् गर्भमधत्त, सा पङ्क्तिमसृजत; जगती गर्भमधत्त, सातिच्छन्दसमसृजत; तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छन्दांस्यासन्; षट् पृष्ठानि तानि तथाकल्पन्त; कल्पते यज्ञोऽपि"—इति। 'तर्हि' तस्मिन् षट्सामसम्पत्तिकाले गायत्री-त्रिष्टुब्-जगतीरूपाणि 'छन्दांसि' त्रीणि भूत्वा, 'तानि' पूर्वोक्तानि षट् पृष्ठसामानि 'नोदाप्नुवन्' पृष्ठानां निष्पत्तिं कर्तुं नाशक्नुवन्। ततो गायत्र्यादीनि त्रीण्यपि गर्भं धृत्वा, पुनः अन्यानि अनुष्टुप्पङ्क्त्यतिच्छन्दोरूपाणि छन्दांस्यसृजन्त। ततः 'तानि' सिद्धानि गायत्र्यादीनि 'त्रीणि', 'अन्यानि' पूर्वसिद्धत्वेनैव पृथग्भावान्यासन्, तथैवानुष्टुभादीनि 'त्रीणि', 'अन्यानि' छन्दांसि तदानीमुत्पन्नानि, इति मिलित्वा षट् छन्दांस्यासन्। ततः षट्सङ्ख्याकानि पृष्ठसामानि धारयितुं 'तानि' षट् छन्दांसि 'तथा अकल्पन्त' तेनैव क्रमेण समर्थान्यभवन्। प्रथमद्वितीयतृतीयेष्वहस्सु गायत्रीत्रिष्टुब्जगत्यः पृष्ठस्तोत्रनिष्पादकाः; चतुर्थपञ्चमषष्ठेष्वहस्सु अनुष्टुप्पङ्क्त्यतिच्छन्दांसि स्तोत्रनिष्पादकानि। एवं सति यज्ञोऽपि पृष्ठ्यषडहाख्यः * 'कल्पते' स्वप्रयोजनाय समर्थो भवति॥

वेदनपूर्वकमनुष्ठानं प्रशंसति—"तस्यै जनतायै कल्पते, यत्रैवमेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान् दीक्षते दीक्षते"—इति। 'यत्र' यस्यां जनतायाम्, 'एवम्' उक्तप्रकारेण गायत्र्यादीनां 'छन्दसां' रथन्तरादीनां 'पृष्ठानां' च एतां 'क्लृप्तिं' कल्पनाप्रकारं

* जै० सू० २. १. १८–२९ सू० ; ५ अधि० ।

आप्नोति, स दीक्षां प्राप्नोति । स पुमान् 'तस्यै जनतायै' तस्यै यज्ञसभायै 'कल्पते' समर्थो भवति । षष्ठोऽध्यायसमाप्तश्च ॥६॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये
(एकोनविंशाध्याये) षष्ठः खण्डः ॥ ६ (२८) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः चतुर्थोऽध्यायः ॥

---

## ॥ अथ पञ्चमाध्यायः ॥

(त॰)

### ॥ अथ प्रथमः खण्डः ॥

---

॥ ॐ ॥ अग्निर्वै देवता प्रथम महर्वहति । त्रिवृत्स्तोमो रथन्तरं साम । गायत्री छन्दो यथादेवत मेनेन यथास्तोमं यथासाम । यथाच्छन्दसं राध्नोति य एवं वेद । यद्वा एति च प्रेति च । तत्प्रथमस्याह्नो रूपं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते । यदयं लोको ऽभ्युदितो यद्राथन्तरं यद्गायत्रं यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाण्युपप्रयन्तो अध्वर मिति । प्रथमस्याह्न आज्यं भवति । प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं । वायवा याहि दर्शतेति प्रउग मेति प्रथमेऽहनि प्रथमस्याह्नो रूप । मा त्वा रथं यथोतय । इदं वसो सुत मन्ध इति । मरुत्वतीयस्य प्रतिपदनुचरौ । रथवच्च पिबवच्च । प्रथमेऽहनि प्रथमस्याह्नो रूप मिन्द्र नेदीय एदिहीती । न्द्रनिहवः प्रगाथः । प्रथमे पदे देवता निरुच्यते । प्रथमेऽहनि प्रथमस्याह्नो रूपं प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः । प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूप मग्निर्नेता त्वं सोम क्रतुभिः पिन्व-

स्वप इति धाय्याः प्रथमेषु पदेषु देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपम् प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपमा यात्विन्द्रो वस उप न इति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपमभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथन्तरं पृष्ठं भवति राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपं यद्वावान पुरुतमं पुराषाळिति धाय्याऽऽवृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपं पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान् प्रथमेऽहनि प्रथमस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यं पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै स्वस्त्ययनमेव तत् कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ १ ( २८ ) ॥

ज्योतिष्मत्या भावतो द्वादशाहो,
दीक्षाकालो याजनं पाशुकश्च ।
ऊढच्छन्दोद्वादशाहप्रशंसा
पृष्ठादीनां छन्दसां तत्र तृप्तिः ॥

इदानीं द्वादशाहक्रतौ प्रायणीयोदयनीयावतिरात्रौ, चतुर्विंशमहः, तन्नितयं वर्जयित्वा मध्यगतो यो नवरात्रः, तं विवक्षुरुपक्रमते—"अग्निर्वै देवता प्रथम महर्वहति, त्रिवृत्स्तोमो रथन्तरं

साम गायत्रीच्छन्दः"—इति। देवतानां मध्ये योऽयं अग्निरस्ति, सोऽयं मत्र देवता भूत्वा नवरात्रस्य प्रथम मह: 'वहति' निर्वाहं-यति। तथा स्तोमानां मध्ये त्रिवृत्स्तोमः प्रथमस्याह्नो निर्वाहकः; साम्नां मध्ये रथन्तराख्यं साम प्रथमस्याह्नः पृष्ठसामनिर्वाहकम्; छन्दसां मध्ये गायत्रीच्छन्दः प्रथमस्याह्नो निर्वाहकम्॥ उक्तार्थ-वेदनं प्रशंसति— "यथादेवत मेनेन यथास्तोमं यथासाम यथा-च्छन्दसं राध्नोति य एवं वेद"—इति। 'यः' पुमान् 'एवम्' अग्नि-त्रिवृद्रथन्तरगायत्रीच्छन्दसां प्रथमेऽहनि देवतात्वं स्तोमत्वं पृष्ठ-सामत्वं छन्दस्त्वं च क्रमेण वेद, स पुमान् 'एनेन' वेदनेन 'यथा देवतं' तस्याह्न उचितां देवता मनतिक्रम्य, तथा स्तोमसाम-च्छन्दांस्यप्युचितानि अनतिक्रम्य समृद्धो भवति॥

प्रथमेऽहनि विनियोज्यामन्त्रविशेषानादौ तावल्लक्षणमुखेन सङ्क्षिप्य दर्शयति—"यद्वा एति च प्रेति च, तत्प्रथमस्याह्नो रूपं; यद् युक्तवद्रथवद्यदाशुमद्यत्पिबवद्, यत्प्रथमे पदे देवता निरुच्यते, यदयं लोकोऽभ्युदितो, यद्राथन्तरं, यद्गायत्रं, यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाणि"—इति। 'यद्वै' यस्मिन्नेव मन्त्रे 'एति च' आकारस्वरनिर्देशार्थं मिति च शब्द उपरि प्रयुक्तः। उपसर्गेषु मध्ये योऽयं आङ् अस्ति, सोऽयं मा चेति परोक्षं निर्दिश्यते। तथा प्रेत्युपसर्गनिर्देशः। आप्रेत्यनयोरुपसर्गयोरन्यतर उपसर्गो यस्मि-न्मन्त्रेऽस्ति, 'तत्' मन्त्रस्वरूपं प्रथमस्याह्नो 'रूपं' लक्षण मित्यर्थः। तथा 'यत्' मन्त्रस्वरूपं 'युक्तवत्' युजिधातूपेतं, 'रथवत्' रथ-शब्दोपेतम्, 'आशुमत्' आशुशब्दोपेतम्, 'पिबवत्' पिबतिधातू-पेतम्, तथा यस्य मन्त्रस्य प्रथमे पादे देवता 'निरुच्यते' निर्दिश्यते, तथा 'अयं लोकः' भूलोकः 'अभ्युदितः' कथितो भवति, तथा

यद् 'राथन्तरं' रथन्तरसामसम्बन्धि, 'गायत्रं' गायत्रीच्छन्दः-सम्बन्धि, गायत्रं साम वा; 'करिष्यत्' करोतेर्धातोर्भविष्यत्काल-याख्यम्, ईदृशं 'यद्' यस्मिन्। एतानि वै सर्वाण्यपि प्रथमस्याह्नो 'रूपाणि' निरूपकाणि, लक्षणानीत्यर्थः ॥

एवं लक्षणमुखेन मन्त्रविशेषान्विधाय प्रतीकोदाहरणेन विस्पष्टं विधत्ते— "उपप्रयन्तो अध्वर मिति प्रथमस्याह्न आज्यं भवति"—इति। प्रकृतौ "प्र वो देवायाग्नये"-इत्यादि प्रउगम्, तद्बाधित्वा नवरात्रस्य प्रथमेऽहनि "उपप्रयन्तः"—इति (सं० १.७४.) सूक्तेन आज्यशस्त्रं शंसनीयम् ॥

तस्मिन् सूक्ते पूर्वोक्तलक्षणेषु एकं लक्षणं योजयित्वा दर्शयति —"प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"—इति। 'प्र'शब्द-रूपोऽय मुपसर्गः, सोऽयं सूक्तगते 'प्रयन्त' इतिपदे दृश्यते; अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नोऽनुकूलम् ॥

मन्त्रान्तरे लक्षणान्तरं दर्शयति— "वायवा याहि दर्शतेति प्रउग मेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"—इति। यद्यपि "वायवा याहि"—इत्यादिकस्य (सं० १.२.) 'प्र'उपसर्गस्य प्राक्-तत्वाभावोदकेनैव तत्प्राप्तिः, तथापि लक्षणं दर्शयितु मय मुप-न्यासः। एत्याकाररूपम् पद मत्रास्ति; आ याहीतिश्रुतत्वात्। अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नो रूपम् ॥

अथ तृचद्वये लक्षणद्वयं दर्शयति—"आ त्वा रथं यथोतय इदं वसो सुत मन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ, रथवच्च पिब-वच्च, प्रथमेऽहनि प्रथमस्याह्नो रूपम्"—इति। "आ त्वा रथम्"—इति (सं० ८.६८.१-३.) तृचो मरुत्वतीयशस्त्रस्य प्रतिपत्; तच्च रथशब्दोपेतम्, "इदं वसो सुतम्"—इति (सं० ८.२.१-३.) अयम्

बह्वृचानुचर: ; तेन पिबवत् ; पिबत सु पूर्वमिति द्वितीयपादे श्रुतत्वात् । प्रथमेऽहनीत्यादिकं पूर्ववत् ॥

अन्यान्तरे लक्षणान्तरञ्च दर्शयति— "इन्द्र मेदीय एद्रिहो-तीन्द्रनिहव: प्रगाथ: ; प्रथमे पदे देवता निरुच्यते ; प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति । "इन्द्र मेदीय"–इत्यय म्नवयरूपत्वा-न्माद्य:' ( सं० ८.५३.५,६. ) । इन्द्रो नितरां माहूयते यस्मिन् प्रगाथे सोऽयम् 'इन्द्रनिहव:' ; एद्रिहोत्येव मात्रान मत्र श्रूयते, प्रगायस्य प्रथमे पादे इन्द्रेति च देवता निर्दिश्यते ; तदेतत्प्रथमस्याह्नो 'रूपं' लक्षणम् ॥

अन्यान्तरे लक्षणान्तरं दर्शयति— "प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्य: ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति । 'ब्राह्मणस्पत्य:' ( सं० १.४०.३,४. ), प्रगाथ इत्यनुवर्त्तते । अत्र 'प्र'शब्दो लक्षणम् ॥

अथ मन्त्रत्रये लक्षणं दर्शयति – "अग्निर्नेता, त्वं सोम क्रतुभि:, पिन्वन्त्यप इति धाय्या: ; प्रथमेषु पदेषु देवता निरुच्यन्ते ; प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति । शस्त्रमध्ये प्रक्षेपणीया ऋचो धाय्या: । "अग्निर्नेता"–इति ( सं० ३. २०. ४. ) प्रथमा धाय्या, "त्वं सोम"–इति ( सं० १.९१.२.) द्वितीया, "पिन्वन्त्यप:" –इति ( सं० १.६४.६. ) तृतीया । एतासां तिसृणा मृचां प्रथमेषु पादेषु अग्निसोममरुद्देवता निर्दिश्यन्ते ; "पिन्वन्त्यपो मरुत: सुदानव:"–इति श्रवणात् * । सोऽयं देवतानिर्देशो लक्षणम् ॥

अन्यान्तरे 'प्र'शब्दरूपं लक्षणं दर्शयति— "प्र व इन्द्राय

---

* प्रथमद्वितीययोस्तु ऋचो: सूत्रे प्रतीकग्रहणमात्रत एव देवताश्रवणं स्फुटम् ; तृतीयस्या अपि प्रथमे एव पादे देवताश्रुतिरिति प्रकटयितुं दर्शयति पिन्वन्त्यप इत्यादि ।

हवन्त इति ( सं० ८.८९.३,४.) मरुत्वतीयः प्रगाथः ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति ॥

मन्त्रान्तरे आकाररूपं लक्षणं दर्शयति—"आ यात्विन्द्रोऽवस उप न इति ( सं० ४.२१. ) सूक्तमिति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति ॥

अथ निष्केवल्यशस्त्रगतस्य मन्त्रस्य रथन्तरसम्बन्धरूपं लक्षणं दर्शयति— "अभि त्वा शूर नोनुमो, ऽभि त्वा पूर्वपीतय इति रथन्तरम् पृष्ठं भवति ; राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "अभि त्वा शूर"-इति ( सं० ७.३२.२२,२३.) रथन्तरसाम्नो योनिभूतः ; "अभि त्वा पूर्वपीतये"-इति ( सं० ८.३.७,८. ) तस्यानुचरः । अतः अभि त्वा शूरेत्यत्र रथन्तरसामसाध्यं पृष्ठं भवति । इदं प्रगाथद्वयं रथन्तरसामसम्बन्धिन्यहनि योग्यम् । अतो रथन्तरसम्बन्धस्य रूपस्य लक्षणस्य सद्भावात् प्रथमेऽहनि प्रयुज्यते ॥

मन्त्रान्तरे आकाररूपं लक्षणं दर्शयति— "यद्वावान पुरुतमं पुराषाळिति धाय्या ; ऽऽ वृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "यद्वावान"-इति ( सं० १०.७४.६. ) अस्य मध्ये प्रक्षेपणीया ; तस्या द्वितीयपादादौ आ वृत्रहेत्याकारः श्रुतः ॥

मन्त्रान्तरे पिबतिधातुरूपं लक्षणं दर्शयति—"पिबा सुतस्य रसिन इति सामप्रगाथः ; पिबवान् प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "पिबा सुतस्य"-इत्ययं काण्वसामविशेषस्य आधारभूतः प्रगाथः ( सं० ८.३.१,२. * ) ॥

---

* ऋ० आ० १.१.५.७ अपि मै० गा० ६.२.१२, ५४ ( कौथुमीय )।

अथ निविद्धानीयस्य सूक्तस्यादौ किञ्चित्सूक्तान्तरं विधत्ते— "त्यमू षु वाजिनं देवजूत मिति ( सं० १०.१७८. ) तार्क्ष्यं पुरस्तात्सूक्तस्य शंसति ; स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै"–इति। तार्क्ष्यो देवता अस्य 'तार्क्ष्यम्', 'स्वस्त्ययनं' क्षेमप्राप्तिरूपम् ; अतो निविद्धानीयसूक्तस्य पुरस्तात् तार्क्ष्यसूक्तशंसनं 'स्वस्तितायै' यजमानस्य क्षेमाय भवति ॥ वेदनं प्रशंसति— "स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"–इति । वेदिता तेन वेदनेन 'स्वस्त्ययन मेव' क्षेमप्राप्ति मेव सम्पादयति। तथा द्वादशाहद्वारा संवत्सरमयस्य 'पार मश्नुते' समाप्तिं प्राप्नोति ॥१॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
( विंशाध्याये ) प्रथमः खण्डः ॥ १ ( २८ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

आ न इन्द्रो दूरादा न आसादिति सूक्त मेति प्रथमेऽहनि प्रथमस्याह्नो रूपं सम्पातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने वामदेवो वा इमांल्लोकानपश्यत्तान्त्सम्पातैः समपतद् यत्सम्पातैः सम-

---

ऋ० सं० ६.२.५.१,२ ऋषी: प्रगाथदृचे ऊ० गा० १६.२.१२. पृ० ( सोमम् )। अथा-ध्यायेषि सामानि सन्ति, ततश्च 'कैवाचित्साम्ना माधारभूत: प्रगाथ:'–इति वक्तव्यं स्यात्।

पतन्तस्सम्पातानां सम्पातत्वं । तद्यत्सम्पातौ प्रथमे-
ऽहनि शंसति । स्वर्गस्य लोकस्य समष्ट्यै । सम्पत्त्यै । तत्स-
वितुर्वृणीमहे । ऽद्या नो देव सवितरिति । वैश्व-
देवस्य प्रतिपदनुचरौ । राथन्तरेऽहनि प्रथमेऽहनि
प्रथमस्याह्नो रूपं । युञ्जते मन उत युञ्जते धिय इति
सावित्रं । युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपं । प्र द्यावा
यज्ञैः पृथिवी ऋतावृधेति द्यावापृथिवीयं । प्रेति
प्रथमेऽहनि प्रथमस्याह्नो रूप । मिहेह वो मनसा
बन्धुता नर इत्यार्भवं । यद्वा एति च प्रेति च । तत्प्र-
थमस्याह्नो रूपं । तद्यत्प्रेति सर्व मभविष्यत् । प्रैष्य-
न्नेवास्माल्लोकाद्यजमाना इति । तद्यदिहेह वो मनसा
बन्धुता नर इत्यार्भवं । प्रथमेऽहनि शंसत्ययं वै लोक
इहेहास्मिन्नेवैनांस्तल्लोके रमयति । देवान् हुवे बृह-
च्छ्रवसः स्वस्तय इति वैश्वदेवं । प्रथमे पदे देवता
निरुच्यन्ते । प्रथमेऽहनि प्रथमस्याह्नो रूपं । महान्तं वा
एतेऽध्वान मेष्यन्तो भवन्ति ये संवत्सरं वा द्वादशाहं
वासते । तद्यद्देवान् हुवे बृहच्छ्रवसः स्वस्तय इति
वैश्वदेवं । प्रथमेऽहनि शंसति । स्वस्तितायै स्वस्त्ययन
मेव तत्कुरुते । स्वस्ति संवत्सरस्य पार मश्नुते य एवं
वेद । येषां चैवं विद्वानेतद्धोता । देवान् हुवे बृहच्छ्र-

वसः स्वस्तय इति वैश्वदेवं प्रथमे ऽहनि शंसति वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत्प्रथमे पदे देवता निरुच्यते प्रथमे ऽहनि प्रथमस्याह्नो रूपं प्र त्वक्षसः प्र तवसो विरप्शिन इति मारुतं प्रेति प्रथमे ऽहनि प्रथमस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पारं मश्नुते य एवं वेद प्र तव्यसीं नव्यसीं धीतिं मग्नय इति जातवेदस्यं प्रेति प्रथमे ऽहनि प्रथमस्याह्नो रूपं समान माग्निमारुतं भवति यच्चाग्निष्टोमे यद्वै यज्ञे समानं क्रियते तत्प्रजा अनु समनक्ति तस्मात्समान माग्निमारुतं भवति ॥ २ (३०) ॥

यस्य सूक्तस्य पुरस्तात्तार्क्ष्यशंसनं विहितम्, तस्मिन्निविद्धान-सूक्ते आकाररूपं लक्षणं दर्शयति— "आ न इन्द्रो दूरादा न आसादिति ( सं० ४.२०. ) सूक्त मिति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"- इति ॥

इदानीं निष्केवल्यमरुत्वतीययोः शस्त्रयोर्निविद्धाने सूक्ते स्तौतु माह— "सम्पातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने; वामदेवो वा इमांल्लोकानपश्यत्, तान्सम्पातैः समपतद्; यत्सम्पातैः समपतत्तत्सम्पातानां सम्पातत्वं; तस्मात्सम्पातौ प्रथमेऽहनि शंसति,

स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै संगत्यै"-इति। सम्पत्तिं प्राप्नुवन्ति आभ्यां यजमानाः सर्वान् लोकानिति 'सम्पातौ'। निष्केवल्यमरुत्वतीयनिविद्धानयोः सूक्तयोर्वैकृतयोः सम्पात इति सञ्ज्ञा। "आ यात्विन्द्रो वसः"-इति ( सं० ४. २१. ) मरुत्वतीयशस्त्रस्य निविद्धानं सूक्तम्; "आ न इन्द्रः"-इति ( सं० ४. २०. ) निष्केवल्यस्य निविद्धानं सूक्तम्; एतयोः सम्पात इति सञ्ज्ञा प्रतिपाद्यते*। पुरा कदाचित् वामदेवः 'इमान्' भूरादीन् लोकान् दृष्ट्वा, तत्प्राप्त्युपायं विचार्य, सम्पातसूक्तैस्तान् प्राप्तवान्। अतः 'सम्पतति' सम्यक् प्राप्नोति लोकानेतैरिति 'सम्पातत्वं' नाम सम्पन्नम्। तथा सत्यत्र प्रथमेऽहनि निष्केवल्यमरुत्वतीययोः सम्पातनामके सूक्ते यदि शंसेत्, तदानीं तच्छंसनं स्वर्गलोकप्राप्ति-भोग्यवस्तुसम्पत्ति-तद्भोगसम्बन्धार्थं सम्पद्यते॥

अथ द्वयोस्तृचयो रथन्तरसम्बन्धरूपं लक्षणं दर्शयति —"तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ; राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्" -इति। "तत्सवितुः" -इति ( सं० ५. ८२. १-३.) तृचो रथन्तरसाम्ना सह प्रयुज्यमानो वैश्वदेवशस्त्रस्य प्रतिपत्; "अद्या नः"-इति ( सं० ५.८२.४-६.) तृचस्तस्यानुचरः; अत उभयोरपि रथन्तरसम्बन्धोऽस्ति, रथन्तरसम्बद्धेऽहनि योग्यतास्ति॥

सूक्तान्तरे युजिधातुरूपं लक्षणं दर्शयति —"युञ्जते मन उत युञ्जते धिय इति सावित्रं; युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपम्" -इति। प्रथमाया ऋचोऽवसाने "देवस्य सवितुः परिष्टुतिः"-इति

* "आ न इन्द्रो दूरादा न आसादिति सम्पातः"-इति ऐ० आर० ५. ८. २. ३.।

युतत्वादिदं ( सं० ५. ८१. ) सवितृदेवताकम्। इह युजिधातुस्तु विस्पष्टः ॥

सूक्तान्तरे प्रशब्दरूपं लक्षणं दर्शयति—"प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति ( सं० १. १५९. ) द्यावापृथिवीयं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"—इति ॥

अस्मिन्वैश्वदेवशस्त्रे सूक्तान्तरं विधत्ते—"इहेह वो मनसा बन्धुता नर इत्यार्भवं ; यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं, —तद्यत्प्रेति सर्वं समभविष्यत्प्रैष्यन्नेवास्माल्लोकाद्यजमाना इति ; तद्यदिहेह वो मनसा बन्धुता नर इत्यार्भवं प्रथमेऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनानस्मिंल्लोके रमयति"—इति। "इहेह वः"—इत्येतत्सूक्तम् ( सं० ३.६०. ) ऋभुदेवताकम् ; द्वितीयाया ऋचोऽन्ते "तेन देवत्वमृभवः समानश"—इतिश्रवणात्। आकार-प्र-शब्दादिकं लक्षणं मन्त्रे नास्तीत्याशङ्क्य 'यद्वै'—इत्यादिना तत्सद्भावे बाध उपन्यस्यते। यदेतदेति च प्रेति चेति, तदेतत्प्रथमस्याह्नो 'रूपं' लक्षणमिति पूर्वं मुक्तम् ( ४०२ पृ० ) ; 'तत्' तथा सति यदि प्रेत्यनेन लक्षणेन युक्तं 'सर्वं' सूक्तजातम् अभविष्यत्, तदानीं यजमाना अस्माल्लोकात् 'प्रैष्यन्' प्रैष्यन्ति मरिष्यन्ति एवेति बाधोपन्यासः। 'तद्यदि'—इत्यादिना समाधानमुपन्यस्यते। यस्मात् प्रशब्दयोगे बाधोऽस्ति, तस्मात्कारणादिहेहेति सूक्तं यदि प्रथमेऽहनि शंसेत्, तदानीमिहेहशब्देनास्य भूलोकस्य विवक्षितत्वाद् 'अस्मिन्नेव' भूलोके एव तत्सूक्तपाठेन 'एनान्' यजमानान् 'रमयति' चिरं क्रीडयति ; ततः प्रशब्दप्रयुक्तो मरणबाधोऽपि परिहृतो भवति ॥

सूक्तान्तरस्य प्रथमपादे देवताभिधानं लक्षणं दर्शयति —"देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे पदे देवता निरुच्यन्ते ;

प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "देवान्"-इत्यादिके सूक्ते बहुवचनान्तस्य देवशब्दस्य श्रवणाद्देवताबाहुल्येनेदं सूक्तं ( सं० १०, ६६, ) वैश्वदेवम् । प्रथमपादे देवशब्दस्तु विस्पष्टः ॥

तत्र स्वस्तिशब्दस्य तात्पर्यं दर्शयति —"महान्तं वा एतेऽध्वान मेष्यन्तो भवन्ति, ये संवत्सरं वा द्वादशाहं वासते ; तद्देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति, स्वस्तितायै"-इति । 'ये' यजमानाः संवत्सरसत्रं वा द्वादशाहं वा अनुतिष्ठन्ति, एते दीर्घ मध्वानं गन्तु मुद्युक्ता भवन्ति ; प्रयोगबाहुल्येनैकाहवत् सहसा समाप्त्यभावात् । अतो देवानित्यादिसूक्ते "स्वस्तये"-इत्येतस्य पदस्य शंसनं 'स्वस्तितायै' क्षेमार्थं भवति ॥

वेदनं प्रशंसति—"स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद, येषां चैवं विद्वानेतद्धोता देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति"-इति । उक्तार्थस्य वेदिता तेन 'स्वस्त्ययन मेव' द्वादशाहस्य क्षेमप्राप्ति मेव कुरुते,— क्षेमेणैव संवत्सरसत्रस्य समाप्तिं प्राप्नोति । किञ्च 'येषां' यजमानाना मुक्तार्थवेदी होता शंसति, तेऽपि यजमाना द्वादशाहं क्षेमेण प्राप्नुवन्ति, संवत्सरसत्रं च समापयन्ति ॥

सूक्तान्तरस्य प्रथमे पादे देवताभिधानं लक्षणं दर्शयति— "वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत् ; प्रथमे पदे देवता निरुच्यते, प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । आग्निमारुतशस्त्रस्य "वैश्वानराय"-इति (सं० ३.३.) सूक्तं प्रतिपत् कर्तव्यम् । स एव शब्दो त्रिस्पष्टं देवता मभिधत्ते ॥

सूक्तान्तरे प्रशब्दरूपं लिङ्गं दर्शयति— "प्रत्वक्षसः प्रतवसो विरप्शिन इति मारुतं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-

इति। "प्रत्वक्षसः"--इति (सं० १.८७.) सूक्ते द्वितीयस्या ऋचो द्वितीयपादे "धय इव मरुतः"-इतिश्रवणात् इदं सूक्तं मरुद्देवताकं शंसेत्। अत्र 'प्र'शब्दो विस्पष्टः ॥

वक्ष्यमाणस्य जातवेदस्यसूक्तस्य पुरस्तादेतां ऋचं विधत्ते— "जातवेदसे सुनवाम सोम मिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति ; स्वस्त्ययनं वै जातवेदस्याः * स्वस्तितायै"–इति। जातवेदा देवता यस्या ऋचः सेयं 'जातवेदस्या' (सं० १.९९.१.) ; तद्देवताकत्वं प्रथमपादे देवताभिधानं लिङ्गं च विस्पष्टम्। अस्या ऋचि "अरातीयतो नि दहाति"--इति शत्रुदाहश्रवणात्, "नावेव सिन्धुम्"--इति नौदृष्टान्तेन दुरितात्ययश्रवणात् च 'स्वस्त्ययनं' क्षेमगमन मत्र विद्यते ; तस्मादियं क्षेमप्राप्तये भवति ॥ वेदनं प्रशंसति— "स्वस्त्ययन मेव तत् कुरुते, स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"--इति ॥

सूक्तान्तरे प्रशब्दलिङ्गं दर्शयति— "प्र तव्यसीं नव्यसीं धीति मग्नय इति जातवेदस्यं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति। यद्यप्यस्मिन् सूक्ते जातवेदःशब्दो न श्रुतः, तथापि तदर्थवाची शब्दः श्रूयते ; जात मुत्पन्नं विश्वं तद्वेत्तीति 'जातवेदाः', तत्पर्य्यायो विश्ववेदःशब्दः। स च "य मेरिरे भृगवो विश्ववेदसम्" –इति चतुर्थ्यां ऋचि श्रूयते। तस्मादिदं सूक्तं (सं० १. १४३.) 'जातवेदस्यं' निविद्धानीयं शंसेत्। अत्र "प्र तव्यसीम्"--इति प्रशब्दो विस्पष्टः ॥

---

* "जातवेदस्या"–इति निर्विसर्गपाठो दृश्यते भाष्यपुस्तकेषु, अर्थतश्च गम्यते तथैव ; परं मूलपुस्तकविरुद्ध एव सः। "जातवेदसे सुनवाम सोम मित्याद्यिमा दत्ते जातवेदस्यानाम्"–इति आश्व० श्रौ० ७.१.१४। 'जातवेदस्यनिवित्सम्बन्धिसूक्तसम्भवात् जातवेदस्याना मिति बहुवचनं जात्यभिप्रायम्'–इति च तत्र वृत्तिकाराः गार्ग्यनारायणीया।

वैश्वानरायेत्यादिकं यदाग्निमारुतं शस्त्रमुक्तम्, तदेतत् प्रशंसति— "समान माग्निमारुतं भवति, यथाग्निष्टोमे, यद् यज्ञे, समानं क्रियते ; तत् प्रजा अनु समनन्ति ; तस्मात्समान माग्निमारुतं भवति"-इति। अस्मिन् प्रथमेऽहनि यदाग्निमारुतं शस्त्र मुक्तम्, यच्चाग्निष्टोमे पूर्वं निरूपित माग्निमारुतं शस्त्रम्, तदुभयं 'समानम्' एकविधम् ; न्यूनाधिकमन्त्राणा मभावात्। यज्ञे यदेवाङ्गं समानं क्रियते, 'तत्' अङ्गम् 'अनु' पश्चात् 'प्रजाः' ऋत्विग्रूपाः पुत्रादिरूपाश्च 'समनन्ति' सम्यक् चेष्टन्ते, सुखेन जीवन्तीत्यर्थः। तस्मात् 'समानं' तुल्य माग्निमारुतं शस्त्रं कर्त्तव्यम् ॥

अत्र प्रथमस्याह्नो लिङ्गेषु 'आप्नमद्', 'गायत्रं', 'करिष्यत्', 'अयं लोकोऽभ्युदितः' इति लिङ्गचतुष्टय मत्र नोदाहृतम्, तथाप्यत्र सम्भव मन्वेष्टव्यम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये ( विंशाध्याये ) द्वितीयः खण्डः ॥ २ ( १० ) ॥

---

॥ अथ तृतीयः खण्डः ॥

इन्द्रो वै देवता द्वितीय महर्वहति पञ्चदश स्तोमो बृहत्साम त्रिष्टुप् छन्दो यथादेवत मेनेन यथास्तोमं

यथासामं यथाच्छन्दसं राध्नोति य एवं वेद। यद्वै नेति
न प्रेति यत्स्थितं तद् द्वितीयस्याह्नो रूपं। यदूर्ध्ववद्य-
त्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता
निरुच्यते। यदन्तरिक्षमभ्युदितं यद्बार्हतं यत् त्रैष्टुभं।
यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाण्यग्निं दूतं
वृणीमह इति। द्वितीयस्याह्न आज्यं भवति। कुर्वद्
द्वितीये ऽहनि द्वितीयस्याह्नो रूपं। वायो ये ते सह-
स्रिण इति प्रउगं। सुतः सोम ऋतावृधेति। वृधन्वद्
द्वितीयेऽहनि. द्वितीयस्याह्नो रूपं। विश्वानरस्य वस्पति-
मिन्द्र इत्सोमपा एक इति। मरुत्वतीयस्य प्रतिपद-
नुचरौ। वृधन्वच्चान्तर्वच्च। द्वितीयेऽहनि द्वितीयस्याह्नो
रूपं। मिन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ। उत्तिष्ठ ब्रह्म-
णस्पत इति ब्राह्मणस्पत्य। ऊर्ध्ववान् द्वितीयेऽहनि
द्वितीयस्याह्नो रूप। मग्निर्नेता त्वं सोम क्रतुभिः।
पिन्वन्त्यप इति धाय्या अच्युता। बृहदिन्द्राय गायतेति
मरुत्वतीयः प्रगाथो। येन ज्योतिरजनयन्नृतावृध
इति। वृधन्वान् द्वितीयेऽहनि द्वितीयस्याह्नो रूप।
मिन्द्र सोमं सोमपते पिबेम मिति सूक्तं। सजोषा
रुद्रैस्तृपदा वृषस्वेति। वृषण्वद् द्वितीयेऽहनि द्वितीय-
स्याह्नो रूपं। त्वां मिद्धि हवामहे। त्वं ह्येहि चेरव इति।

बृहत्पृष्ठं भवति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यद्वावानेति धाय्याच्युतोभयं शृण्वत न इति सामप्रगाथो यद्वेद मघ यदु च नू नमासीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं त्य मू षु वाजिनं देवजूत मिति तार्क्ष्योऽच्युतः ॥ ३ ( ३१ ) ॥

द्वादशाहगतनवरात्रे प्रथम महर्निरूप्य द्वितीय महर्निरूपयति—"इन्द्रो वै देवता द्वितीय महर्वहति, पञ्चदश स्तोमो बृहत्साम त्रिष्टुप् छन्दः"–इति। देवतानां मध्ये इन्द्रो देवता, स्तोमानां मध्ये पञ्चदशः स्तोमः, साम्नां मध्ये बृहत्साम, छन्दसां मध्ये त्रिष्टुप् छन्दः; इत्येतच्चतुष्टयं द्वितीयस्याह्नो निर्वाहकम् ॥ वेदनं प्रशंसति—"यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद" इति। वेदिता स्वकीयवेदनेन यथोक्तदेवतास्तोमसामच्छन्दांस्यनतिक्रम्य तत्प्रसादेन समृद्धो भवति ॥

अथ द्वितीयस्याह्नो गमकानि मन्त्रलिङ्गानि निर्दिशति—"यद्वै नेति न प्रेति, यत् स्थितं, तद् द्वितीयस्याह्नो रूपं; यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्, यन्मध्यमे पदे देवता निरुच्यते, यदन्तरिक्ष मभ्युदितं, यद्बार्हतं, यत् त्रैष्टुभं, यत् कुर्वदेतानि वै द्वितीयस्याह्नो रूपाणि" इति। प्रथमस्याह्न एति प्रेति लिङ्गद्वयं 'यद्वै' यदेवोक्तम्, तदत्र द्वितीयस्याह्नो लिङ्गं न भवतीति नकारद्वयेनोभयं निषिध्यते। 'यत् स्थितं' तिष्ठतिधातु-

रूपवद् बहुषु स्थानेष्वप्रस्तुतत्वेनावस्थितं च सम्यग् दृश्यते, तद् द्वितीयस्याह्नो 'रूपं' लिङ्गम्। तथैवोर्ध्वशब्दोपेतम्, प्रतिशब्दोपेतम्, अन्तःशब्दोपेतं, वृषशब्दोपेतं, वृधशब्दोपेतं च यदाम्नातम्, तत्सर्वं द्वितीयस्याह्नो रूपम्। यत्र साक्षाच्छब्दो न श्रूयते, तत्र तदर्थो द्रष्टव्यः। मध्यमे पदे देवताभिधानम्, अन्तरिक्षलोकाभिधानम्, बृहत्सामसम्बन्धम्, त्रिष्टुप्छन्दःसम्बन्धम्, वर्त्तमानार्थप्रत्यययुक्त-करोतिधातुरूप मित्येतानि सर्वाणि द्वितीयस्याह्नो 'रूपाणि' निरूपकाणि लिङ्गानि द्रष्टव्यानि॥

अस्मिन् द्वितीयेऽहन्याज्यशस्त्रं विधत्ते—"अग्निं दूतं वृणी-मह इति (सं० १. १२.) द्वितीयस्याह्न आज्यं भवति ; कुर्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"—इति। अत्र कुर्वदिति लिङ्गोपन्यासः। यद्यप्यग्निं दूत मित्यादौ साक्षात् कुर्वच्छब्दो न श्रूयते, तथापि करोत्यर्थस्य सर्वधातुगतसामान्यत्वात् वर्त्त-मानार्थवाचिप्रत्ययान्तं धातुमात्रं कुर्वच्छब्देन विवक्षितम्। अत्रापि "वृणीमहे"—इति वर्त्तमानार्थवाचिप्रत्ययान्तो धातुः श्रूयते। तस्मात् द्वितीयेऽहन्येतत्सूक्तं विनियोक्तुं योग्यम् ; ततो द्वितीय-स्याह्नो लिङ्गम्॥

आज्यशस्त्रं विधाय प्रउगशस्त्रं विधत्ते—"वायो ये ते सहस्रिण इति (सं० २. ४१.) प्रउगं ; सुतः सोम ऋतावृधेति वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"—इति। "वायो ये ते"—इत्यादिकं शस्त्रं कुर्य्यात्। एतस्मिन् सूक्ते चतुर्थ्या ऋचो द्वितीयः पादः "सुतः सोम ऋतावृधा"—इति ; अस्य पादस्यान्ते वृधेति-श्रवणादिदं प्रउगं 'वृधन्वत्' वृधिधातुयुक्तम्। द्वितीयेऽहन्यो-स्यादिकं पूर्ववत्॥

अथ संवत्तीयं मन्त्रं विधत्ते— "विश्वानरस्य वस्पति मिति द्वाभ्यां एक इति मरुत्वतीयस्य प्रतिपदनुचरौ ; इन्द्रवन्तौ मेद्धं, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति । "विश्वानरस्य"– इत्ययं तृचः ( सं० ८. ६८. ४–६.) अस्य प्रतिपत् । तस्मिन् तृचे द्वितीयस्या ऋचः प्रथमपादे 'वृधन्वत्' वृधिधातुयुक्तं लिङ्गमस्ति ; "अभिष्टये सदावृधम्"–इतिश्रवणात् । "इन्द्रः"–इत्ययं ( सं० ८. २. ४–६.) तृचोऽनुरूपः । तत्रान्तःशब्दयुक्तं लिङ्गमस्ति ; प्रथमाया ऋचस्तृतीयपादे 'अन्तर्देवान्'–इतिश्रवणात् ॥

अथ प्रगाथद्वये लिङ्गद्वयं दर्शयति— "इन्द्र नेदीय एदिही-त्यच्युतः प्रगाथ, उत्तिष्ठ न्नोजसा सह इति ब्राह्मणस्पत्य ऊर्ध्ववान्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति । "इन्द्र नेदीयः"–इत्यादिकः प्रगाथः ( सं० ८.५३.५,६.) प्रथमेऽहन्यपि विहितः, उत्तरत्रापि विधास्यते ; तस्मादयं विधीयमानोऽच्युतो भवति, प्रच्युतेरभावात् । तदिदमच्युतत्वं स्थितशब्दार्थत्वात् स्थितवल्लिङ्गम् । "उत्तिष्ठ"–इत्ययं प्रगाथः ( सं० १. ४०. १, २ ) ऊर्ध्वलिङ्गवान् ; ऊर्ध्ववाचिन उच्छब्दस्य श्रवणात् ॥

अथ तिसृषु धाय्यासु अच्युतत्वं लिङ्गं दर्शयति— "अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यप इति धाय्या अच्युताः"–इति । "अग्निर्नेता"–इति ( सं० ३. २०. ४. ) प्रथमा धाय्या, "त्वं सोम" –इति ( सं० १. ९१. २. ) द्वितीया, "पिन्वन्त्यपः"–इति ( सं० १.६४.६.) तृतीया । प्रथमेऽहन्यपि एतासां विहितत्वादच्युतत्वम् ॥

प्रगाथान्तरे लिङ्गं दर्शयति— "बृहदिन्द्राय गायतेति मरुत्वतीयः प्रगाथो, येन ज्योतिरजनयन्नृतावृध इति वृधन्वान्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति । "बृहदिन्द्राय" इत्येवो मरु-

श्रेषताकः (सं० ८,८६.१,२.); "मरुतो वृषवत्तमम्"-इति द्वितीय पादे श्रवणात् । तस्य "येन ज्योतिः"-इति तृतीयः पादः ; तत्र "ऋतावृधः"-इतिश्रवणात् अयं प्रगाथो वृधिधातुरूपलिङ्गवान् ॥

लिङ्गदर्शनद्वारा सूक्तं विधत्ते—"इन्द्र सोमं सोमपते पिबेम मिति सूक्तं ; सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति । "इन्द्र सोमम्"-इत्यस्मिन् सूक्ते (सं० ३, ३२.) "सजोषाः"-इत्यादिको द्वितीयस्या ऋचश्चतुर्थः पादः ; तत्र वृषस्वेतिश्रवणात् वृषण्लिङ्ग मस्ति ॥

अथ निष्केवल्यशस्त्रस्य स्तोत्रियानुरूपयोः प्रगाथयोः बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति—"त्वा मिद्धि हवामहे, त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति ; बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति । "त्वा मिद्धि"-इति (सं० ६.४६.१,२.) बृहत्साम्न आधारभूतः स्तोत्रियः प्रगाथः ; "त्वं ह्येहि"-इत्यनुचरः प्रगाथः (सं० ८. ६१. ७, ८.) । प्रथमे प्रगाथे बृहत्सामयुक्तं पृष्ठस्तोत्रं भवति । अत्र प्रगाथद्वयस्य बृहत्सामसम्बन्धात् 'बार्हते' बृहत्सामसम्बन्धिन्यहनि तदुभयं योग्यम् ; द्वितीयस्य चाह्नो बृहत्सामसम्बन्धित्वात् तस्मिन्नहनि विनियोक्तव्यम् । अयञ्च बृहत्सामसम्बन्धो द्वितीयस्याह्नो लिङ्गम् ॥

अथैकस्या मृच्यच्युतत्वं लिङ्गं दर्शयति—"यद्वावानेति (सं० १०.७४.६.) धाय्याच्युता"-इति । प्रथमेऽहन्यप्यस्या ऋचो विहितत्वादच्युतत्वम् ॥

अथ प्रगाथान्तरे बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति—"उभयं शृणवच्च न इति सामप्रगाथो, यच्चेद मद्य यदु च ह्य आसीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-

इति । "उभयम्"-इत्यादिको बृहत्कामसक्तप्रयुज्यमानः प्रगाथः ( सं० ८. ६१. १, २. ) । उभयशब्दस्य कोऽर्थः सोऽभिधीयते— 'अद्य' अस्मिन् दिने 'यत्' कार्य्य मासीत्, 'इदञ्च' कार्य्य मेकम्; 'यदु च' यदपि 'ह्यः' पूर्वेद्युः कार्य्य मासीत्, तदपीत्येवं कार्य्यद्वयम् । 'शृणवत्' श्रुत मासीत् । इति मन्त्रगतस्योभयं शृणव-दित्यस्यार्थः । आर्हत इत्यादि पूर्ववत् ॥

सूक्तान्तरे पूर्ववदच्युतत्व लिङ्ग दर्शयति—"त्य मू षु वाजिनं देवजूत मिति ( मं० १०. १७८. ) तार्क्ष्योऽच्युतः"-इति । तार्क्ष्य-देवताकस्य सूक्तविशेषस्य प्रथमेऽहनि विहितत्वादुत्तरोत्तरे-ष्वप्यनुवर्त्यत्वादच्युतत्वम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
( विंशाध्याये ) तृतीयः खण्डः ॥ ३ ( २१ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

या त ऊतिरवमा या परमेति सूक्तं जहि वृष्ण्यानि कृणुही पराच इति वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं विश्वो देवस्य नेतुम् तत्सवितुर्वरेण्यम् आ विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो

रूपं उदु ष्य देवः सविता हिरण्ययेति सावित्रं मूर्ध-वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं ते हि द्यावापृथिवी विश्वशम्भुवेति द्यावापृथिवीयं सुजन्मनी धिषणे अन्तरीयत इत्यन्तवद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं तक्षन् हरी इन्द्रवाहा वृषण्वसू इति वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यज्ञस्य वो रथ्यं विश्पतिं विशा मिति वैश्वदेवं वृषा केतुर्यजतो द्या मशायतेति वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं तद् शार्यात मङ्गिरसो वै स्वर्गाय लोकाय सत्र मासत ते ह स्म द्वितीयं द्वितीय मेवाहरागत्य मुह्यन्ति तान्वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्त मशंसयत् ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकं तद्यदेतत्सूक्तं द्वितीयेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद् वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं वृष्णे शर्धाय सुमखाय वेधस इति मारुतं वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्या-

सूक्तं यज्ञेन वर्धत जातवेदसमिति जातवेदस्यं वृधन्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूप मह्नो रूपम् ॥ ४ (३२) ॥

## ॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां पञ्चमोऽध्यायः ॥५॥

सूक्तान्तरे वृषशब्दोपेतं लिङ्गं दर्शयति— "या त ऊतिरवमा या परमेति सूक्तं; जहि वृष्ण्यानि कृणुही पराच इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्" इति। "या त ऊतिः" इत्यस्मिन् सूक्ते ( सं० ६.२५. ) "जहि वृष्ण्यानि" इति तृतीयस्या ऋचश्चतुर्थः पादः। तत्र वृषशब्दयुक्तं लिङ्गं दृश्यते ॥

अथ वैश्वदेवशस्त्रगतयोस्तृचयोर्बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति— "विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ; बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्" इति। "विश्वो देवस्य" इत्येका ऋक् ( सं० ५.५०.१. ), "तत्सवितुः" इति द्वे ऋचौ ( सं० ३.६२.१०,११. ); सोऽयमेकस्तृचो बृहत्सामसम्बन्धभूतो वैश्वदेवशस्त्रस्य प्रतिपद्भवति। "आ विश्वदेवम्" इत्येष तृचः ( सं० ५.८२.७-९. ) तस्यानुचरः। अत उभयोर्बृहत्सामसम्बन्धः ॥

सूक्तान्तरे लिङ्गं दर्शयति—"उदु ष्य देवः सविता हिरण्ययेति सावित्रं मूर्धन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्" इति। अस्मिन् तृचात्मके सावित्रसूक्ते ( सं० ६.७१. ) ऊर्ध्वार्थवाचिन उच्छब्दस्य श्रवणात् मूर्धन्वत्त्वमस्ति ॥

सूक्तान्तरे लिङ्गं दर्शयति—"ते हि द्यावापृथिवी विश्वशम्भु-वेति द्यावापृथिवीयं ; सुजन्मनी धिषणे अन्तरीयत इत्यन्तर्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"--इति। अस्मिन् द्यावापृथिवीये सूक्ते ( सं० १. १६०. ) "सुजन्मनी"--इत्येषः प्रथमाया ऋचस्तृतीयः पादः। तत्रान्तःपदस्य श्रूयमाणत्वात् अन्तर्वल्लिङ्गम् ॥

सूक्तान्तरे लिङ्गं दर्शयति— "तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं ; तक्षन् हरी इन्द्रवाहा वृषण्वसू इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "तक्षन्रथम्"--इति सूक्तमृभुदेवताकम् ( सं० १. १११. ) ; प्रथमाया ऋचस्तृतीयपादे "तक्षन् पितृभ्या ऋभवः"-इतिश्रवणात्। तत्रैव "तक्षन्हरी"--इत्यादिकस्तृतीयः पादः ; तस्मिन्वृषण्वसू इति वृषण्वल्लिङ्गं दृश्यते॥

सूक्तान्तरे लिङ्गं दर्शयति— "यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवं ; वृषा केतुर्यजतो द्यामशायतेति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "यज्ञस्य"--इत्यादिसूक्ते ( सं० १०. ९२. ) "इन्द्रो मित्रो वरुणः"--इत्येवं बहुदेवताश्रवणात् इदं वैश्वदेवम्। "वृषा केतुः"--इति एषः प्रथमायाश्चतुर्थः पादः। तत्र वृषण्वल्लिङ्गमस्ति ॥

तदेतत् सूक्तं प्रशंसति— "तदु शार्यातं मङ्गिरसो वै स्वर्गाय लोकाय सत्रमासत ; ते ह स्म द्वितीयं द्वितीयमेवाहरागत्य मुह्यन्ति ; तान्वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्तमशंसयत् ; ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकं ; तद्यदेतत्सूक्तं द्वितीयेऽहनि शंसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै" -इति। "यज्ञस्य वो रथ्यम्"--इत्यादिकं सूक्तं ( सं० १०. ९२. ) 'शार्यातम्', शार्यातस्य कस्यचिन्महर्षेः सम्बन्धादित्यवगन्तव्यम्।

कथं सम्बन्धः? इति, तदुच्यते—पुरा कदाचिदङ्गिरसो महर्षयः स्वर्गार्थं सत्त्रमनुष्ठातुमुद्युक्ताः; तदा ते महर्षयो यस्मिन् यस्मिन् सत्त्रे पृष्ठ्यषडहस्य द्वितीयमहरनुतिष्ठन्ति, तत्र सर्वत्र द्वितीये द्वितीयेऽहनि शस्त्रबाहुल्यात् कुत्र किं शस्त्रं पठितव्यमित्यज्ञात्वा मुह्यन्ति। तदानीं शार्यातनामकः कश्चिन्मानवः ऋत्विग्भूत्वा 'तान्' अङ्गिरसो महर्षीन् "यज्ञस्य वः"-इत्यादिकं सूक्तं द्वितीयेऽहन्यशंसयत्। 'ततः' सूक्तप्रभावादेव 'ते' महर्षयो 'यज्ञं प्राजानन्' यज्ञं प्रकर्षेण ज्ञातवन्तः। तत्साध्यं स्वर्गलोकं च प्राजानन्। तस्माद् द्वितीयेऽहन्येतस्य सूक्तस्य शंसनेन व्यामोहमन्तरेण यज्ञः प्रज्ञातो भवति, स्वर्गश्चावगम्यते ॥

शस्त्रान्तरस्य प्रतिपदि लिङ्गं दर्शयति—"पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद्; वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। तत्र (सं० ६.८.१ २.) "वृष्णः"-इति-श्रवणाद् वृषण्वल्लिङ्गम् ॥

मारुतसूक्ते लिङ्गं दर्शयति—"वृष्णे शर्धाय सुमखाय वेधस इति मारुतं; वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। अत्र प्रथमाया ऋचो द्वितीयपादे "प्रभरा मरुद्भ्यः"-इतिश्रवणादिदं सूक्तं (सं० १, ६४.) मारुतम्। वृषण्वल्लिङ्गं स्पष्टम् ॥

जातवेदस्याया अच्युतत्वं लिङ्गं दर्शयति—"जातवेदसे सुनवाम सोममिति (सं० १. ९९. १.) जातवेदस्याच्युता"-इति। प्रथमेऽहन्यस्या ऋचो विहितत्वादच्युतत्वम् ॥

सूक्तान्तरे लिङ्गं दर्शयति—"यज्ञेन वर्धत जातवेदसमिति जातवेदस्यं; वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। जातवेदोदेवताकत्वं वृधन्वल्लिङ्गं चात्र (सं० २. २.) विस्पष्टम् ॥

अस्मात्सोऽध्यायपरिसमाप्त्यर्थः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
(विंशाध्याये) चतुर्थः खण्डः ॥ ४ (२२) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः पञ्चमोऽध्यायः ॥

देवा वै षट्[1]। प्रजापतिर्वै सोमाय राज्ञे
ऽष्टौ[2]। ज्योतिर्गौरायुरष्टौ[3]। प्रजापतिः षट्[4]।
अग्निर्वै चत्वारि[5] ॥ ४ * ॥
देवा वै, ब्राह्मणस्पत्यया, ऽऽहूय दूरोहणं द्वादश ॥ ४ † ॥

॥ इति चतुर्थपञ्चिका समाप्ता ॥

---

* २४५, २७८, ३२१, ३३६, ४०५ पृ० (६—८—८—६—४= ३२ ख०)।
† ३४५, ३८८, ३४६ पृ० (१०—१०—१२=३२ ख०)। १आ० ३३२पृ० + द्वादशाहः